गोवर्धन-ग्रन्थ-माला-१७



# कृति-सुधा

( पद्यकाव्यम् )

प्रणेता

सुभाष

अलंकार-प्रकाशन, जयपुर

७४ नतेजा ब्लाक, आदर्श नगर जयपुर ३०२००४

आदरणीया बहन डा. प्रज्ञा देवी जी को सादर भेंट



गोवर्धन-ग्रन्थ-माला १०

सुभाष वेदालंकार
28-8-81

# संस्कृति-सुधा



प्रणेता

**डा० सुभाष वेदालंकार**

एम. ए. ( संस्कृत, वेद ) पी. एच. डी. साहित्याचार्य

अध्यक्ष संस्कृत विभाग

महारानी श्री जया महाविद्यालय, भरतपुर

मूल्य ३)

प्रकाशक–मनीषा तनेजा

एम. ए. ( संस्कृत, हिन्दी ) शास्त्री

**अलंकार-प्रकाशन, जयपुर**

७४ तनेजा ब्लाक, आदर्श नगर, जयपुर ३०२००४

## —समर्पण—

*

वेदों के विद्वान, व भाष्यकार, २५ भाषाओं
के वेत्ता एवं मनीषी लेखक
कविवर
श्रद्धेय गुरुप्रवर
**पं० धर्मदेव जी विद्यामार्तण्ड**
की
पुण्य स्मृति में

शिवरात्री
१९८१

विनयावनत—
सुभाष वेदालंकार



## प्राक्कथन

संस्कृति-सुधा को अनुग्रहशील पाठकों को समर्पित करते हुए अपार हर्ष हो रहा है।

अक्टूबर १९८० में आदरणीया बहन डा० प्रज्ञादेवी जी, आचार्या पाणिनि कन्या महाविद्यालय वाराणसी अपनी शिष्याओं के साथ चतुर्वेद परायण महायज्ञ कराने लिये पानीपत पधारीं थीं। उसी यज्ञ महोत्सव के शुभावसर पर एक दिन उनका प्रवचन सुनते समय मेरे मन में वेद, धर्मशास्त्र आदि में प्रतिपादित भारतीय विचार धारा तथा भारतीय संस्कृति को काव्य के माध्यम से प्रस्तुत करने का विचार आया। और मैंने लिखना भी शुरु कर दिया।

अक्टूबर १९८० के बाद मुझे बार २ बस यात्रा भी करनी पड़ी, उसी यात्रा काल में इस लघुकाव्य का मैंने निर्माण किया है। लिखने के बाद नामकरण की समस्या आई, अनेक नाम मस्तिष्क में उठे। अन्ततोगत्वा आदरणीय डा. रामचन्द्र द्विवेदी, डीन कला संकाय राजस्थान विश्वविद्यालय, द्वारा सुझाया गया संस्कृति-सुधा नाम मुझे पसन्द आया। इस नामकरण के लिये डा० द्विवेदी जी विशेष धन्यवाद के पात्र हैं।

इस लघुकाव्य को मैं अपने गुरुवर पं० धर्मदेव जी विद्यामार्तण्ड को भेंट कर रहा हूँ। पूज्य पंडित जी वेदों के धुरन्धर विद्वान एवं २५ भाषाओं के वेत्ता तथा मनीषी लेखक थे। अध्यापन काल में प्रत्येक विषय में वे मार्गदर्शन करते हुए निरन्तर आगे बढ़ने की मुझे प्रेरणा देते थे। गतवर्ष ही कराल काल ने सदा के लिये हमें उनकी स्नेहमयी छत्रछाया से वंचित कर दिया।

संस्कृति-सुधा के माध्यम से भारतीय संस्कृति की झांकी प्रस्तुत करने का प्रयास किया गया है। यदि संस्कृत में रुचि रखने वाले, हिन्दी भाषा के ज्ञाता भी इसकी भाषा व भाव को समझ सकें तो मैं अपना प्रयास सफल समझूंगा।

आशा है सहृदय अध्येता अपनी अमूल्य सम्मति भेज कर अनुगृहीत करेंगे।

विनयावनत
सुभाष वेदालंकार

# अनुक्रमणिका

# * संस्कृति–सुधा *

ध्यायं ध्यायं सदाध्येयं स्मारं स्मारञ्च सत्कवीन् ।
गुरुवर्यान्नमस्कृत्य लघुकाव्यं करोम्यहम् ॥१॥

धन्यास्ते गुरवो वन्द्या जनकाश्च महीतले ।
शिष्याणाञ्च सुतानाञ्च हिते ये सर्वदा रताः ॥२॥

गुरुषु सर्ववन्द्येषु रामनाथो गुरुर्महान् ।
दूरस्थो ऽपि चिरान्नित्यं हितचिन्तनतत्परः ॥३॥

वेदादिसच्छास्त्रपवित्रमूर्ति–
रुदारचेता विदुषां विभूतिः ।
साधुस्वभावः सदयः सुवन्द्यः
श्रीरामनाथो मतिमान् गुरुर्मे ॥४॥

धर्मदेवो गुरुर्वन्द्यो माननीयो मनीषिणाम् ।
वेदज्ञो भाष्यकारश्च धर्मविच्च तपोधनः ॥५॥

पञ्चविंशति-भाषाणां विदुषे लेखकाय च ।
कवये सादरं तस्मै काव्यमेतत् समर्प्यते ॥६॥

कोविदाग्रो गुरुर्वन्द्य : सर्वशास्त्र-महोदधिः ।
राजस्थानप्रदेशस्य वैकुण्ठे गौरवन्तु यः ॥७॥

मान्यः श्री जगदीशोऽसौ वनस्थल्यां विराजते ।
वेदाध्ययन-संलग्नो नम्यो वेदविदां वरः ॥८॥

पारदृश्वा तु विद्यानां कविकर्म-विदां वरः ।
भट्टश्रीमथुरानाथो वन्दनीयः सदा जनैः ॥९॥

साहित्य-मंथने लग्नः काव्यगुम्फनतत्परः ।
बुधवर्यः सदा वन्द्यः श्रीमान् नवलकाङ्कुरः ॥१०॥

काव्यादिनां प्रणयने मम प्रेरको यः
सद्ग्रन्थ-ग्रन्थनरतस्सततं स्वयञ्च ।
साहित्य-दर्शन-निधिः श्रुतिमान् स नम्यः ।
श्रीरामचन्द्र इति लब्धयशा द्विवेदो ॥११॥

ततः प्राप्य धियं शक्तिञ्चाभिधानं कृतं मया ।
लघुकाव्यमिदं दिव्यां कीर्ति प्रीतिं तनोतु वः ॥१२॥

शिष्यात् पुत्रात् पराजयेत् भावनेयं गरीयसी ।
प्रार्थये सच्चिदानन्दं तया स्यामाप्लुतः सदा ॥१३॥

वेदा विद्या-निधानानि स्रोतांसि सर्वसंस्कृतेः ।
मूलानि चैव धर्माणां सृष्टा भगवता स्वयम् ॥१३॥

क ईशस्तत्स्वरूपं किं कश्च धर्मस्सनातनः ।
किं कर्म किं पुनर्जन्म को वर्णश्चाश्रमश्च कः॥१४॥

किं सत्यं किञ्चदानं किं तन्महत्त्वञ्च जीवने ।
को देवः कश्च संस्कारः किं सेव्यं हेयमेव च ॥१५॥

आर्यशब्दस्य का भाषा कश्चानार्यो निगद्यते ।
किमस्ति तस्य कर्तव्यं वर्तेत जीवने कथम् ॥१६॥
सर्वमेतद्धि विख्यातं शास्त्रेषु संहितासु च ।
ततस्सञ्चित्य तत्त्वानि काव्यञ्च गुम्फितं मया ॥१७॥
गणितानि नु तान्येव तत्त्वानीह च तत्त्वतः ।
संसारे सर्ववन्द्यायां संस्कृतौ भारतस्य नः ॥१८॥
तानि सर्वाणि संगृह्य वेदादिभ्यः पृथक् पृथक् ।
संस्कृते दर्पणं काव्यं चित्रमत्र विधीयते ॥१९॥
रङ्गमञ्चो जगत्सर्वं दृश्यमानं चराचरम् ।
ललनाः पुरुषाश्चैव नर्तकास्तत्र केवलम् ॥२०॥
ईश्वरः सूत्रधारोऽस्ति मञ्चस्यास्य न संशयः ।
नर्तयन् सर्वलोकं स सुखं तिष्ठति सर्वदा ॥२१॥
लोके संदृश्यते यद्यत् वस्तुजातं चराचरम् ।
ईशेन निर्मितं व्याप्तं धारितञ्च सदैव तत् ॥२२॥
ईश्वरस्तावदेको ऽस्ति न द्वितीयस्स उच्यते ।
न तृतीयश्चतुर्थो वा पञ्चमः षष्ठ एव वा ॥२३॥
न सप्तमोऽष्टमो वापि नवमो न निगद्यते ।
एकः स एक एवास्ति, एकः केवलमुच्यते ॥२४॥
तस्य चैवाभिधानानि शतं वै गणितानि च ।
गुणकर्मविभागेन वर्णितानि च तत्त्वतः ॥२५॥
ईश्वरः सच्चिदानन्दस्वरूपः सर्वशक्तिमान् ।
अजन्मासौ दयालुश्च निराकारस्तथा [illegible] ॥२६॥

अनादिर्निर्विकारश्च सर्वाधारः परः प्रभुः ।
अनन्तोऽनुपमो दिव्यः सर्वकर्मक्षमो विभुः ॥२७॥

सर्वेश्वरोऽभयो नित्यः सर्वव्यापी सनातनः ।
सृष्टिकर्ता पवित्रश्च परिभूस्सेव्य एव सः ॥२८॥

अशरीरोऽक्षतोऽपापः स्नायुजालैरपावृतः ।
विशुद्धो दीप्तिमानात्मा व्याप्नोति भुवनत्रयम् ॥२९॥

क्रान्तदर्शी मनीषी स स्वयम्भूरजरो ऽ मरः ।
संविष्टः सर्वभूतेषु स्वशक्त्या सर्ववित् सदा ॥३०॥

आदिकालादनादिश्च दधौ सृष्टिं यथार्थतः ।
ददौ वेदं समस्तञ्च वस्तुजातं सनात् स नः ॥३१॥

आत्मैको गतिशून्योऽयं मनसोऽपि द्रुतं व्रजेत् ।
देवाश्च ज्ञानिनो नैव मेधया तद् गतिं विदुः ॥३२॥

अधावन् धावतो योऽन्यान् लङ्घते सहजं सदा ।
जलादिगतिमद्वस्तु वायुश्च तद्वशं वसेत् ॥३३॥

तिष्ठन् प्रतिष्ठते यो ऽसौ गच्छन्नपि च तिष्ठति ।
भुवनस्यान्तिके तस्य दूरे च वसतिस्सदा ॥३४॥

सत्यविद्या विलोक्यन्ते लोके या विश्वविश्रुताः ।
ईशस्तासां समस्तानामादिमूलं न संशयः ॥३५॥

पदार्था ये च विद्याभिस्ताभिर्ज्ञाता भवन्ति च ।
तेषामपीश्वरो मूलं नित्यं ज्ञेयस्सदा जनैः ॥३६॥

सर्वासु सत्यविद्यासु वेदविद्या गरीयसी ।
सृष्टा भगवता सृष्टेरादौ लोकहिताय या ॥३७॥
वेदाश्च सन्ति चत्वारः ऋग्यजुस्सामलक्षणाः ।
चतुर्थोऽथर्ववेदोऽस्ति रचिता विभुना स्वयम् ॥३८॥
भारते सर्वशास्त्राणि दृश्यन्ते यानि कानि च ।
स्रोतस्तेषां समस्तानां वेद एव न संशयः ॥३९॥
त्रीणि तत्त्वान्यनादीनि जीवेशौ प्रकृतिस्तथा ।
ईशस्तावत्पुरा प्रोक्तो द्वयमन्यन्निबोधत ॥४०॥
आत्मा जीवश्च देही वा मतोऽनादिस्सनातनः ।
अजो नित्योऽमरोऽवध्यो देहे सर्वस्य राजते ॥४१॥
नववस्त्रं यथा धत्ते नरस्त्यक्त्वा पुरातनम् ।
जीवो जीर्णं परित्यज्य तथा देहं नवं नवम् ॥४२॥
प्रकृतिश्च तथा प्रोक्ताऽनादिरूपा तथापरा ।
जगतो जननी नित्या मता वेदे पदे पदे ॥४३॥
नहि सत्यात्परो धर्मो नानृतात् पातकं परम् ।
सत्ये सर्वं स्थितं ज्ञानं वेदेषूक्तं पदे पदे ॥४४॥
धर्ममाश्रित्य कर्तव्यं सत्यासत्यं विचार्य च ।
सर्वं यज्ञमयं कर्म पुण्यं लोकहितावहम् ॥४५॥
कर्मणो महिमा सर्व-शास्त्रेषु प्रतिपादितः ।
दशोपनिषदां सारमैकेश्वर्यमूलं [illegible] ॥४६॥

सततं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥४७॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गो ऽस्त्वकर्मणि ॥४८॥
इति पद्यद्वयं गीताशास्त्रादेवोद्धृतं मया ।
ब्रूते तत्कर्ममाहात्म्यं पुण्यं लोकहितावहम् ॥४९॥
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
गीतासारमिदं वाक्यं यजुर्वेदे विवर्णितम् ॥५०॥
चरैवेति चरैवेति , इन्द्र इच्चरतः सखा ।
उच्चैर्डिण्डिमघोषोऽयं कृतो वेदे पदे पदे ॥५१॥
कृतं मे दक्षिणे हस्ते जयो मे सव्यआहितः ।
श्रुतिवाक्यमिदं दिव्यं सर्वं सौख्यप्रदायकम् ॥५२॥
आसक्तिरहितं कार्यं कृतं फलति सर्वदा ।
शुभकृच्छुभमाप्नोति पापकृच्चाशुभं तथा ॥५३॥
कर्माश्रितं पुनर्जन्म प्रोक्तमत्र महर्षिभिः ।
यादृशं यस्य कर्मास्ति तादृशं जन्म तस्य च ॥५४॥
सदसच्चरितं कर्म यादृशं पूर्वजन्मनि ।
पुनर्जन्म भवेत्तादृक् सर्वशास्त्रमतं श्रुतम् ॥५५॥
जातस्य हि ध्रुवो मृत्यु ध्रुवं जन्म मृतस्य च ।
गीतावाक्यमिदं पुण्यं पुनर्जन्म विधायकम् ॥५६॥

आर्य शब्दो हि शास्त्रेषु पुरुषश्रेष्ठ-सूचकः ।
नं देवानां प्रिया वाच्या मन्वाना जातिसूचकम् ॥५७॥
लोकोपकरणं प्रोक्तमार्यधर्मस्सनातनः ।
शरीरात्म-समाजानामुन्नत्या तच्च संभवेत् ॥५८॥
सत्यासत्यग्रहत्यागे सुजनःस्यात्समुद्यतः ।
उपदिष्टमिदं वेदे ब्रह्मणा सत्यरूपिणा ॥५९॥
भौतिकीमुन्नतिं कुर्वन्नरस्सत्यन्न विस्मरेत् ।
यन्मुखं स्वर्णपात्रेण तिष्ठत्यपिहितं सदा ॥६०॥
तन्मुखं ज्ञानलाभाय कुर्यादार्यो ह्यपावृतम् ।
येन रूपं विभो र्दृष्ट्वा पुष्टिं तुष्टिं सदाप्नुयात् ॥६१॥
अविद्याया विनाशे यस्तत्परस्संयतेन्द्रियः ।
विद्याया वर्धने चैव नर आर्यः स गद्यते ॥६२॥
विद्या तु वैदिकं ज्ञानमविद्या ऽवैदिकं मतम् ।
कृत्वा नाशमविद्याया-र्विद्या वृद्धौ वसेत्सदा ॥६३॥
संस्कारश्चैव कर्तव्यः समये शास्त्रसम्मते ।
वृद्धिशुद्धि-प्रदश्चोक्त आर्यधर्मश्च यो मतः ॥६४॥
षोडश सन्ति संस्काराः कर्मशुद्धि-प्रदायकाः ।
प्रधाना धर्मशास्त्रेषु प्रख्यातास्त इमे मताः ॥६५॥
गर्भाधानं पुरा प्रोक्तं गर्भपूर्वञ्च तत्भवेत् ।
पुंसवनं ततश्चोक्तं चतुर्थे मासि यत्नतः ॥६६॥

सीमन्तोन्नयनं तावन्मासे षष्ठे ऽथ यन्मतम् ।
पुण्यं स्वास्थ्यकरं पूर्णगर्भरक्षाविधायकम् ॥६७॥
जातकर्म शिशो र्जाते मन्यते नामकर्म च ।
अह्न्येकादशे चोक्तमेकाधिक-शतेऽथवा ॥६८॥
निष्क्रमणं चतुर्थे स्यात् षष्ठेऽन्नप्राशनं तथा ।
मासे च मुण्डनं पुण्यं वर्षीयस्य तु कर्हिचित् ॥६९॥
प्रतिहते तृतीये वा वर्षे चोलं मतं श्रुतम् ।
कार्यं प्रीतिकरं पुण्यं नैकरोगहरञ्च तत् ॥७०॥
कर्णवेधस्तृतीये स्यात् वत्सरे पञ्चमेऽथवा ।
बालानां बालिकानाञ्च नासिकाच्छेद एव सः ॥७१॥
अथ पुण्यपरो दिव्यस्सर्वमोदप्रदायकः ।
उपनयन-संस्कारो वेदारम्भकरो मतः ॥७२॥
ब्राह्मणस्याष्टमे वर्षे संस्कारो ऽयं मतस्सदा ।
वर्ष एकादशे चैव क्षत्रियस्य मतश्च सः ॥७३॥
द्वादशे वैश्यवर्णस्य कर्तव्यश्च सदा जनैः ।
उपनयनसंस्कारः शूद्रस्याथ भवेन्न वा ॥७४॥
ऋणत्रयं वहंश्चित्ते देवर्षिपितृनामकम् ।
धत्ते यज्ञोपवीतञ्च बालः पुण्यकरं तथा ॥७५॥
पर्युपास्ते च गायत्रीमुपवीतो जनस्तदा ।
भवत्यथ च संस्कारो वेदारम्भ इति श्रुतः ॥७६॥

ब्रह्मचर्याश्रमद्वारं संस्कारो ऽयं मतस्सदा ।
उपवीती गुरुं कृत्वा वेदविद्यां पठेत्ततः ॥७७॥

कोविदा वेद-वक्तारो विधेया गुरवस्सदा ।
शिष्याणां शोषकाश्चैव त्याज्या सर्वदा जनैः ॥७८॥
निन्द्यास्ते शिक्षका धूर्ता हेयाश्च दूरतस्सदा ।
उत्कर्षं ये तु शिष्याणां न सहन्ते कदाचन ॥७९॥

शिष्यात् पुत्रात्पराजयेत् श्रुतिमान्यमिदं वचः ।
विस्मृत्य सर्वथा क्रूराः शिष्यापकरणे रताः ॥८०॥
विद्यायाश्च समाप्तायां समावर्तन-नामकः ।
संस्कारश्चोपदेशश्च भवेदन्ते गुरो र्महान् ॥८१॥

धर्मं चर सदा वत्स सत्ये शक्तिं निवेशय ।
वेदादि-सर्वशास्त्राणां स्वाध्यायं कुरु सर्वदा ॥८२॥
आचार्याय प्रियं दत्त्वा यथेच्छं दक्षिणा धनम् ।
गृहस्थं गच्छ मा छिन्धि प्रजातन्तुश्च पुण्यदम् ॥८३॥
स्वाध्यायाद्धर्मकार्याच्च न प्रमाद्यैः कदाचन ।
सत्यात् प्रवचनाच्चैव कुशलाच्च कथञ्चन ॥८४॥
माता पिता गुरुश्चैवातिथि र्देवो महान् मतः ।
पूज्याः प्रोक्ता इमे वेदे माता पूज्यतमा मता ॥८५॥

अनवद्यानि कर्माणि सेवितव्यानि सर्वथा ।
परित्याज्यानि चान्यानि स्वस्मै लोकहितार्थं च ॥८६॥

गुरुदेवप्रणीतानि सुकर्माणि वचांसि च।
अनुकार्याणि सर्वाणि यानि सुचरितानि च ॥८७॥
दातव्यं श्रद्धया दानं देयमश्रद्धयापि वा
श्रिया देयं भिया देयं ह्रिया वा संविदापि वा ॥८८॥
सूर्यचन्द्रौ सदा दत्तः प्रकाशं सुखदायकम्।
तस्मात् पूज्याविमौ प्रोक्तौ पूज्येते च दिवानिशम्।८९।
जलदा जाह्नवी वन्द्या धेनु र्वन्द्या च दुग्धदा।
फलपुष्पप्रदाता च पूज्यते पादपः सदा ॥९०॥
तस्माद्देयं सदा देयं वदन्तीति विचक्षणाः।
दानेन शोभते पाणिर्दानी सर्वत्र वन्द्यते ॥९१॥
वर्तितव्यं सदा प्रीत्या धर्मरीत्या च पूरुषैः।
उपदिष्टमिदं वेदे शास्त्रे चापि मुहुर्मुहुः ॥९२॥
त्रि चिकित्सा यदा वृत्तो कार्ये चाप्यथवा भवेत्
अनुकार्या द्विजा धर्म्या भूदेवा वेदवित्तमाः ॥९३॥
सामाजिके समेषाञ्च नियमे नु हितावहे
परतन्त्रः सदा स्थेया स्वतन्त्रो हितकारिणि ॥९४॥
भवन्तु सुखिनः सर्वे सन्तु सर्वे निरामयाः।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःख भाग्भवेत् ॥९५॥
सुखदां वरदां कृत्वा भावनां हृदि सर्वदा।
समः स्याः सर्वभूतेषु रागद्वेषबहिष्कृतः ॥९६॥

मित्रस्य चक्षुषा लोकान् वसुधाञ्च कुटुम्बवत् ।
पश्यन्नरः सुखं याति पुण्यभाग् च भवत्युत ॥ ९७ ॥

प्रीतिर्दिव्या च पुण्या च तापसंतापहारिणी ।
विमला सुखदा ग्राह्या सर्वदा वरदा हृदा ॥९८॥

हृदये विमलस्नेहो मुखे च मधुरं वचः ।
यस्य तिष्ठति जीवोऽसौ भाग्यवान् सुखभाग्जनः ॥९९॥

अथ विवाहसंस्कारस्सर्वाश्रमसुदप्रदः ।
पञ्चविंशे मतो वर्षे गृहस्थाश्रमसूचकः ॥१००॥

अल्पायुषि विवाहस्तु सर्वशास्त्रैर्विनिन्दितः ।
वेदेऽपि धिक्कृतस्तावद् परिहार्यस्सदैव सः ॥ १०१ ॥

ब्रह्मचर्येण कन्या वै युवानं विन्दते पतिम् ।
वेदवाक्यमिदं बालविवाहस्य निरोधकम् ॥ १०२ ॥

पञ्चविंशति वर्षाणां विवाहाय मतं वयः ।
पुरुषाणाञ्च कन्यानां वत्सरः षोडशः स्थितः ॥१०३॥

वध्वा समं वरो गेहे शुद्धे याति यदा नवे
गृहप्रवेशसंस्कारस्तदा भवति पुण्यदः ॥१०४॥

प्रविश्य नूतनं गेहं समुत्पाद्य च सन्ततिम् ।
गृहस्थः कुरुते तस्या वर्धनं रक्षणं तथा ॥१०५॥

गृहस्थिनः परो धर्मः प्रजानामेव पालनम् ।

अन्येषामाश्रमाणाञ्च रक्षणं यजनं तथा ॥१०६॥

अनुव्रतः पितुः पुत्रो मात्रा भवतु सम्मनाः
जाया पत्ये वदेद्वाचं सूनृतां सरलां तथा ॥१०७॥

मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा
सम्यञ्च सव्रता भूत्वा वाचं वदत भद्रया ॥१०८॥

श्रुतिवाक्यमिदं यस्य गेहे वसति सर्वदा
स्वर्गस्तत्र सुखं तत्र सततं नात्र संशयः ॥१०९॥

पञ्चविंशान्तथा वर्षान्नु पञ्चाशत्तमं मतम्
वर्षं गृहस्थ-धर्मस्य वानप्रस्थाश्रमस्ततः ॥११०॥

वानप्रस्थाश्रमं प्राप्य सेव्यं धर्म्यं तपोवनम् ।
स्वाध्यायश्चैव कर्त्तव्यः शास्त्राणां सततं तथा ॥१११॥

पुत्रस्य सम्पदश्चैव वाञ्छा लोकसुखस्य च ।
वानप्रस्थिजनेनेदं त्यक्तव्यमेषणात्रयम् ॥११२॥

पञ्चविंशतिवर्षाणि यावत् सेव्यं तपोवनम् ।
तपो ज्ञानञ्च चेतव्यं यज्ञेन तपसा तथा ॥११३॥

ज्ञान-धर्मतपः पुण्ये नीत्वा कालं तपोवने ।
प्रविशेदाश्रमं दिव्यं सन्यास इति सुश्रुतम् ॥११४॥

पञ्चसप्तति-वर्षेषु वयसो विगतेषु ।
संस्कारोऽथ कर्तव्यः सन्यासाश्रमलक्षणः ॥११५॥

पारदृश्वा तु शास्त्राणां वेदविद्या-विशारदः ।
वन्द्यः कस्य न सन्यासी सर्वलोकहिते रतः ॥११६॥

काषायञ्च प्रपन्ना ये केवलं वृत्तिहेतुना ।
हेयास्ते दूरतो हेयाः परिव्राजक-वञ्चकाः ॥११७॥

सन्यासिनः परो धर्मः सन्मार्गस्य प्रवर्तनम् ।
परिव्रजंस्तदर्थञ्च परिव्राजक उच्यते ॥११८॥

धिक्तान् सन्यासिनो धूर्तान् मठाधीशानरुन्तुदान् ।
वसन्ति सर्वतीर्थेषु सुखेन मठमाश्रिताः ॥११९॥
दृष्टा लीला मया तेषां भोगिनां हठयोगिनाम् ।
भोगैश्वर्य-प्रसक्ता ये सुखं तिष्ठन्ति वञ्चकाः ॥१२०॥
अहो जिह्मा मठाधीशाः पूजयन्ति नराधमाः ।
वेदं वस्त्रावृतं तीर्थे कृतकृत्या भवन्ति च ॥१२१॥
धिक्तान् धिक्तान् महाधूर्तान् धनलुण्ठनतत्परान् ।
कामिनः कामिनीलग्नान् लोभोपहतमानसान् ॥१२२॥
कालुष्यमुपनीयन्ते दुष्टैरेभिर्मठस्थितैः ।
तीर्थानि पुण्यस्रोतांसि दिव्यानि सुखदानि च ॥१२३॥
तेषु केचन वर्तन्ते पावना वेदवित्तमाः ।
रागद्वेषविमुक्ता ये वन्दनीया महीतले ॥१२४॥
ब्रह्मचर्यं गृहस्थञ्च वानप्रस्थं तथैव च ।
सन्यासश्च चतुर्थोऽस्ति चत्वारस्तावदाश्रमाः ॥१२५॥

एवं संक्षेपतः प्रोक्ता आश्रमा वै हितावहाः ।
धर्मकर्मफलास्सर्वे वर्णाश्चापि सुख-प्रदाः ॥१२६॥

द्विजो ब्रह्ममुखाज्जातो बाह्वोः क्षत्रियस्तथा
वैश्यऊर्वो मंतो वेदे पादाच्छूद्रस्तथैव च ।।१२७।।
ब्राह्मणस्य परो धर्मो यजनं याजनं तथा ।
स्वाध्यायोऽध्यापनञ्चैव वेदधर्मप्रचारणम् ।।१२८।।
क्षत्रियस्य महान् धर्मो लोकपालनपोषणम् ।
अर्तिनामापदाञ्चैव हरणं देशरक्षणम् ।।१२९।।
कृषि-गोरक्ष्यवाणिज्यं देशवित्त-विवर्धनम् ।
कथितं धर्मशास्त्रेषु वैश्यकर्म स्वभावजम् ।।१३०।।
ब्रह्मक्षत्रियवैश्यानां सेवनं गृहरक्षणम् ।
शूद्राणां गदितं कर्म शास्त्रैश्च श्रुतिसम्मतैः ।।१३१।।
वर्णाश्रमव्यवस्थेयं वेदशास्त्रादिसम्मता
अङ्गीकार्याऽनुकार्या च सर्वदा जीवने जनैः ।१३२।
जातिर्नाङ्गीकृता वेदे धर्मशास्त्रे ऽपि गर्हिता ।
जातिभावस्सदा भेदजनकस्त्याज्य एव स ।। १३३।।
जन्मना जायतेः शूद्रः संस्कारात् द्विज उच्यते
इति यो वै विजानाति वन्द्यो ऽसौ मतिमान्नरः ।।१३४।।
अन्तिमो ऽन्त्येष्टिसंस्कारः कर्तव्योऽथ दिवङ्गते ।
जने देयं शरीरञ्च घृतदग्धाय वह्नये ।।१३५।।
विश्वे दुःखांनि सर्वाणि दृश्यन्ते यानि कानि च
मृत्यु दुःखन्तु सर्वेभ्यो नूनमेवातिरिच्यते ।।१३६।।



तस्य त्रासाञ्च संत्रस्तो नरस्तिष्ठन्नकर्मकृत् ।
कोविदैर्ज्ञानिभिर्निन्द्यो धर्मभ्रष्टोऽधमो मतः ॥१३७॥

अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥१३८॥

नीतिवाक्यमिदं नित्यं यो वै चरति निस्पृहः ।
निर्ममो निरहङ्कार स वै नरोत्तमः स्मृतः ॥१३९॥

सुखदुःखभरे लोके यथा स्वप्नास्तथा वयम् ।
लघुजीवनमस्माकं मृत्युनापरिवेष्टितम् ॥१४०॥

न शरीरं न वा वित्तं न दुःखं न सुखं तथा
केवलं धर्म एवास्ति निधने ऽप्यनुयाति यः ॥१४१॥

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः
सेव्यस्तस्मात्सदा धर्मो जनेन भूतिमिच्छता ॥१४२॥

धर्मशब्दस्य का भाषा तत्स्वरूपञ्च किम्मतम् ।
ऋषयो विमतास्तत्र पंडिताश्च विमोहिताः ॥१४३॥

अहिंसां वा सदाचारं सत्यं वा धर्ममुत्तमम्
आहुर्धर्मप्रवक्तारो मनुरेवं तथाब्रवीत् ॥१४४॥

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥१४५॥

श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥१४६॥

धारणाद्धर्म इत्याहु र्धर्मो धारयते प्रजाः ।
महाभारतवाक्यं वै गरीयश्च मतं मम ॥१४७॥
यस्य यस्य हि तत्त्वस्य जीवने धारणेन च
शिवं स्यात् सर्वलोकस्य धर्मोऽसाविति मे मतिः ।१४८।
तस्मादुक्तानि तत्त्वानि सत्यादीनि यानि च ।
जनानां निजकर्माणि धर्मवाच्यानि तानि वै ॥१४९॥
सर्वसंस्कारसम्पन्नः सुखमाप्नोति पूरुषः ।
सर्वद्वन्द्वविनिर्मुक्तस्तिष्ठन् संपत्तिसंयुतः ॥१५०॥
समासतः समाख्यातं वेदशास्त्रादिसम्मतम् ।
सर्वं संस्कृतितत्त्वं वै विदित्वा प्रीतिमाप्नुयात् ।१५१।

सुभाष वेदालंकार

समाप्त

*—*

मुद्रक— मदन मोहन प्रिंटिंग प्रेस, मथुरा

# अलंकार-प्रकाशन-ज

७४ तनेजा ब्लाक, आदर्श नगर, जयपुर, द्वारा प्रव

| | | |
|---|---|---|
| १. महाकविः कल्हणः | डा. | |
| २. कल्हणस्य राज तरङ्गिण्यां चित्रिता भारतीय-संस्कृतिः | डा | |
| ३. किरातार्जुनीयम् | प्रो. मदन शर्मा, | |
| ४. सस्कृत-निबन्ध-पारिजातः | डा. सुभाष | |
| ५. ईशकाव्यम् | डा. | |
| ६. महाराणा-प्रताप-चरितम् | डा. सुभाष | |
| ७. संस्कृत-सोपानम् ( ४ भाग ) | डा. सुभाष वेदालंकार | ८/ |
| ८. हिन्दी-राजतरङ्गिणी | डा. सुभाष वेदालंकार | १२/ |
| ९. वेद-विचार-दर्पण | डा. सुभाष वेदालंकार | ३/ |
| १०. शुकनासोपदेशः | सुभाष वेदालंकार उमेश शास्त्री | ५/ |
| ११. रघुवंशम् | सुभाष वेदालंकार, मनीषा तनेजा | ६/ |
| १२. काव्यदीपिका | सुभाष वेदालंकार मनीषा तनेजा | ४/ |
| १३. सस्कृत-दर्शन-दीपिका | डा. सुभाष वेदालंकार | |
| १४ संस्कृत-गद्य-सौरभम् | सुभाष वेदालंकार मदन मोहन शर्म | |
| १५. संस्कृत-शिशु-गीतम् | डा. सुभाष वेदालङ्कार | /  |
| १६. लघु सिद्धान्त कौमुदीः | हरिराम आचार्य, सुभाष वेदालंकार | ५/ |
| १७. प्रतिज्ञा यौगन्धरायण | डा. सुभाष वेदलंकार | ८/ |
| १८. ईशावास्योपनिषद् | डा. सुभाष वेदालंकार | २/५० |
| १९. संस्कृत-सौरभम् | डा. वेदालंकार | २/ |
| २०. अलोक-अंकुरण | चेतन पाराशर | १२/ |

*—*